# ॥ अथ कुञ्जिकास्तोत्रम् ॥

ॐ अस्य श्रीकुञ्जिकास्तोत्रमंत्रस्य सदाशिव ऋषिः ॥ अनुष्टुपछंदः ॥ श्रीत्रिगुणात्मिका देवता ॥ ॐ ऐं बीजम् ॥ ॐ ह्रीं शक्तिः ॥ ॐ क्लीं कीलकम् ॥ मम सर्वाभीष्टसिद्ध्यर्थे जपे विनियोगः ॥ ॐ शिव उवाच ॥ श्रृणु देवि प्रवक्ष्यामि कुञ्जिकास्तोत्रमुत्तमम् ॥ येन मंत्रप्रभावेण चण्डीजापः शुभो भवेत् ॥१॥ न कवचं नार्गलास्तोत्रं कीलकं न रहस्यकम् ॥ न सुक्तं नापि वा ध्यानं न न्यासो न वार्चनम् ॥२॥ कुञ्जिकास्तोत्रमात्रेण दुर्गापाठफलं लभेत् ॥ अतिगुह्यतरं देवि देवानामपि दुर्लभम् ॥३॥ गोपनीयं प्रयत्नेन स्वयोनिरिव पार्वति ॥ मारणं मोहनं वश्यं स्तम्भनोच्चाटनादिकम् ॥४॥ पाठमात्रेण संसिद्ध्येत कुञ्जिकास्तोत्रमुत्तमम् ॥ ॐश्रूँ श्रूँ श्रूँ शं फट् ऐं ह्रीं क्लीं ज्वल उज्ज्वल प्रज्वल ह्रीं ह्रीं क्ली स्त्रावय स्त्रावय शापं नाशय नाशय श्रीं श्रीं श्रीं जूं सः स्त्रावय आदय स्वाहा ॥ ॐ श्लीं हूँ क्लीं ग्लां जूं सः ज्वलोज्ज्वल मन्त्रं प्रज्वल हं सं लं क्षं फट् स्वाहा ॥५॥ नमस्ते रूद्ररूपायै नमस्ते मधुमर्दिनि ॥ नमस्ते कैटभनाशिन्यै नमस्ते महिषार्दिनि ॥६॥ नमस्ते शुम्भहन्त्र्यै च निशुम्भासुरसूदिनि ॥ नमस्ते जाग्रते देवि जपे सिद्धिं कुरुष्व मे ॥७॥ ऐंकारी सृष्टिरूपिण्यै ह्रींकारी

प्रतिपालिका ॥ क्लींकारी कामरूपिण्यै बीजरूपे नमोस्तु ते ॥८॥ चामुण्डा चण्डरूपा च यैंकारी वरदायिनी ॥ विच्चे त्वभयदा नित्यं नमस्ते मन्त्ररूपिणि ॥९॥ धां धीं धूं धूर्जटेः पत्नी वां वीं वूं वागीश्वरी तथा ॥ क्रां क्रीं क्रूं कुञ्जिकादेवि शां शीं शुं मे शुभं कुरू ॥१०॥ हूं हूं हूंकाररूपायै ज्रां ज्रीं ज्रूं भालनादिनी ॥ भ्रां भ्रीं भ्रूं भैरवी भद्रे भवान्यै ते नमो नमः ॥११॥ ॐ अं कं चं टं तं पं सां विदुरां विदुरां विमर्दय विमर्दय ह्रीं क्षां क्षीं स्त्रीं जीवय जीवय त्रोटय त्रोटय जंभय जंभय दीपय दीपय मोचय मोचय हूं फट् ज्रां वौषट् ऐं ह्रीं क्लीं रञ्जय रञ्जय सञ्जय सञ्जय गुञ्जय गुञ्जय बन्धय बन्धय भ्रां भ्रीं भ्रूं भैरवी भद्रे सङ्कुच संचल त्रोटय त्रोटय म्लीं स्वाहा ॥१२॥ पां पीं पूं पार्वती पूर्णा खां खीं खूं खेचरी तथा ॥ म्लां म्लीं म्लूं मूलविस्तीर्णा कुञ्जिकास्तोत्रहेतवे ॥१३॥ अभक्ताय न दातव्यं गोपितं रक्ष पार्वति ॥ विहीना कुञ्जिकादेव्या यस्तु सप्तशतीं पठेत् ॥ न तस्य जायते सिद्धिर्ह्यरण्ये रुदितं यथा ॥१४॥